श्री

# मंगलाष्टकें





॥ स्वस्ति श्रीगणनायकं गजमुखं मोरेश्वरं सिद्धिदं ॥ बल्लाळो मुरुडं विनायकमहं चिंतामणिं स्थेवरं ॥ लेण्याद्रिं गिरिजात्मजं सुवरदं विघ्नेश्वरं ओझरं ॥ ग्रामो रांजण संस्थितो गणपतिः कुर्यात् सदा मंगलम् ॥ १ ॥

लक्ष्मीःकौस्तुभपारिजातकसुरा धन्वंतरिश्चं-द्रमा । गावःकामदुधाःसुरेश्वरगजो रंभादिदेवां-गनाः ॥ अश्वः सप्तमुखो विषं हरिधनुःशंखोऽमृतं चांबुधे । रत्नानीह चतुर्दश प्रतिदिनं कुर्वंतु वो मंगलम् ॥ २ ॥

कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं ॥ नासाग्रे वर मौक्तिकं करतले वेणुःकरे कंकणम् ॥

सर्वांगे हरिचंदनं सुललितं कंठेच मुक्तावली। गोपस्त्री परिवेष्टितो विजयते कुर्यात् सदा मंगलम् ॥ ३ ॥

गंगा सिंधु सरस्वती च यमुना गोदावरी नर्मदा। कावेरी शरयूमहेंद्रतनया चर्मण्वती वेदिका ॥ क्षिप्रा वेत्रवती महासुरनदी ख्याता च या गंडकी ॥ पूर्णाः पूर्णजलैः समुद्रसहिताः कर्वंतु वो मंगलम् ।४।

रामो राजमणिः सदा विजयते रामं रमेशं भजे । रामेणाभिहता निशाचरचमू रामाय तस्मै नमः ॥ रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं । रामेचित्तलयः सदा भवतु मे कुर्यात् सदा मंगलम् ॥ ५ ॥

यं ब्रह्मा वरुणेंद्ररुद्रमरुतः स्तुन्वंति दिव्यै स्तवैर्वेदैःसांगपदक्रमोपनिषदैर्गायंति यं सामगाः । ध्यानावस्थिततद्गतेन मनसा पश्यंति यं योगिनो। यस्यांतं न विदुःसुरासुरगणा कुर्यात सदा मंगलम् ॥ ६ ॥

या कुंदेंदुतुषारहारधवला या शुभ्रवस्त्रावृता ॥ या वीणावरदंडमंडितकरा या श्वेतपद्मासना ॥ या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वंदिता ॥ सा मां पातु सरस्वती भगवती कुर्यात्सदा मंगलम् ॥ ७ ॥

मालाकार परस्परें कर गळां घालूनि गोपांगना ॥ गाती नाचति पाहती अवघिया एका जगज्जीवना ॥ सोन्याचे मणि ओंविले भुजगुणीं गोऱ्या शशांकानना ॥ पाचूचे पदक स्थळीं स्मर मना श्रीदेवकीनंदना ॥ ८ ॥

कंठे यस्य विराजते हि गरलं शीर्षे च मंदाकिनी । वामांके गिरिजाननं कटितटे शार्दूल-चर्मांबरम् ॥ माया यस्य रुणद्धि विश्वमखिलं तस्मै नमः शंभवे । सस्थाणुः स्थिर भक्तियोग सुलभः कुर्यात्सदा मंगलम् ॥ ९ ॥

नत्वा स्वां कुलदेवतां च कमलां विघ्नेश्वरं शारदां । वक्ष्ये कृष्णविवाहकौतुकमिदं चेतोहरं

शृण्वताम् ॥ स्वस्यैवान्यगुणानुवर्णनपरिश्रांतस्य विश्रांतये । रुक्मिण्यादिसहस्रषोडशपतिः कुर्यात् सदा मंगलम् ॥ १० ॥

जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता ॥ स्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्तुं धराम् ॥ पार्वत्या महिषासुरप्रमथने सिद्धादिभिर्मुक्तये ॥ ध्यातः श्रीगिरिजासुतो गणपतिः कुर्यात् सदा मंगलम् ॥ ११ ॥

ब्रह्माद्या सनकादयः सुरगणः संतः सभावज्रिणौ । भारद्वाजपराशरादि मुनयः संस्तूयःमाना सदा ॥ विश्वामित्रपुरोगमा मुनिगणपौराणिका याज्ञिका । भोक्तारो निगमागमार्थे निपुणाः कुर्वंतु वो मंगलम् ॥ १२ ॥

यौ तौ शंखकपालभूषितकरौ मालस्थिमालाधरौ ॥ देवौद्वारवतीस्मशाननिलयौ नागारिगोवाहनौ ॥ द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजा वल्लभौ ॥ पापं वो हरतां सदा हरिहरौ दत्तां सदा मंगलम् ॥ १३ ॥

मोठे दोंद कटीं फणींद्र बरवा भाळीं शशी शोभते । हस्तीं अंकुश लड्डु पद्म परशु दंतीं हिरा झळकतो ॥ पायीं पैंजण घागरीं रुणझुणी प्रेमें बरा नाचतो । ऐसा देव गणेश तो वधुवरां कुर्यात्सदा मंगलम् ॥ १४ ॥

लक्ष्मीशो भुवनत्रयो निगदितो देवान्मनुष्यो-रगान् । संस्थातुं करुणानिधिः करुणया मार्तंड-वंशे ययौ ॥ संकल्पो निजगर्भसंभवकृते जन्म-न्यसा धारणे ॥ जातः श्रीरघुनायकस्य जननं कुर्यात्सदा मंगलम् ॥ १५ ॥

नागो भाति मदेन कंजलरुहः पूर्णेंदुना शर्वरी ॥ शीलेन प्रमदा जवेन तुरगो नित्योत्सवमादरम् ॥ वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभापंडितैः सत्पुत्रेण कुलं नृपेण वसुधा कुर्वन्तु वो मंगलम् । १६ ।

मत्स्यापासुनि चारि ते नरहरीपर्यंत झाले कृतीं ॥ नेतीं वामन परशुराम तिसरा श्रीराम

सीतापती ॥ ऐसे हे अवतार सात मग तो द्वापारिंचा आठवा । श्रीकृष्णः कलिमाजि बौद्ध नववा कल्की पुढें दाहवा ॥ १७ ॥

आलीं लग्नघटी समीप नवरा घेऊनि यावा घरा । गुह्योक्तें मधुपर्क पूजन करा अंतःपटातें धरा ॥ दृष्टादृष्ट वधूवरां न करतां दोघे करावीं उभीं ॥ वाजंत्रें बहु गलबला न करणें कुर्यात सदा मंगलम् ॥ १८ ॥

---

## अथ विवाहललितम्

अविरलमदधाराधौतकुंभःशरण्य फणिवरयुतगात्रःसिद्धसाध्यादिवंद्यः ॥ त्रिभुवनजगविघ्नध्वांतविध्वंसदक्षो वितरतु गजवक्त्रः संततं मंगलं वाम् ॥ १ ॥

विघ्नाशनो विघ्नविदुरकारी निर्विघ्नकार्यःसकलार्थसिद्धिः ॥ विघ्नेश्वरो विघ्नहरेशपूज्यो वधूवराभ्यां शुभतां ददातु ॥ २ ॥

करतलघृत लड्डुभोजनः सर्वदा यः प्रणजतनसमूहे सिद्धिदो यस्तु नित्यम् ॥ असुरसुरमुनींद्रैः पूजितो विघ्नहर्ता सकळभुवननाथो मंगलं वां ददातु ॥ ३ ॥

सकसभुवनवृंदानंदसंदोहकंदः प्रतिदिन ममृतौघैः प्रीणितः स्वर्गवृंदः ॥ परमपुरुषचित्तादुद्गतो रोहिणीशः कुमुदकुलविकासी मंगलं वां ददातु ।४।

दिनकरशशिभौमाश्चंद्रपुत्रौऽमरेज्यो सुरकुलगुरुरार्किःसैंहिकेयश्च केतुः ॥ ददतु शुभफलं वामिष्टलग्ने सुरेशो विधिहरिहरसंज्ञाः सस्त्रियो विघ्नराजः ॥ ५ ॥

दलितदनुजवृंदं यस्य मंत्रप्रभावात् सुरपतिरपि भुंक्ते निर्भयो नाकराज्यम् ॥ शमितसकलदोषं यस्य दृष्ट्या विलग्नं स सुरगुरुरजस्रं मंगलं वां ददातु ॥ ६ ॥

यन्मंगलं प्रवरशंखगदाधरस्य रामस्य रावण-
जयाय समुद्यतस्य ॥ जित्वा निशाचरपुरीं पुनरा-
गतस्य तन्मंगलं भवतु वां विजयाय नित्यम् ॥७॥

यन्मंगलं त्रिदशमौलिकिरीटरत्नंचंद्रप्रभा पट-
लधौतपदांबुजस्य ॥ गौरीविवाहसमये शशिशेख-
रस्य तन्मंगलं भवतु वां विजयाय नित्यम् ॥८॥

सकलभुवनयध्यध्वांत विध्वंसदीपस्त्रिदशपति-
दिशोयः स्वर्णताटंकपत्रम् ॥ सकलभुवनलक्ष्मी-
दायको नायकोऽह्नां विबुधनिखिलमूर्तिर्मंगलं वां
ददातु ॥ ९ ॥

यावद्वीचीस्तरंगान्वहति सुरनदी जाह्नवी
पुण्यतोया यावच्चाकाशमार्गे तपति दिनकरो
भास्करो लोकपालः ॥ यावद्वज्रेंद्रनीलस्फटि-
कमणिशिला वर्तते मेरुश्रृंगे तावत् शंभोः प्रसादात्
स्वजनपरिवृतौ जीवतां दंपती वै ॥ १० ॥



यन्मंगलं महेंद्रस्य प्राप्ते देवसमागमे ऋषिभिः स्तूयमानस्य तद्वां भवतु मंगलम् ॥ ११ ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव ॥ विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ १२ ॥

---

## अथ वधुवरांतें चिंतन करविजे

॥ सुलग्न सावधान ॥ इष्टदेवता कुलदेवता ग्रामदेवतांचिंतन सुमुहूर्त सावधान ॥ लक्ष्मी नारायणाचिंतन सावधान ॥ ब्रह्मासावित्रीचिंतन सुलग्न सावधान ॥ उमामहेश्वरचिंतन सुलग्न सावधान ॥ जयघंटाशब्दप्रमाण सुलग्न सावधान ॥ अंतःपट दृढ असिजे सावधान ॥ अत्यासंधी सावधान ॥ अति सुलग्न सावधान ॥ अति समीप सावधान ॥ सावधान ॥ सावधान ॥ सावधान ॥ इति विवाहललितम् ॥

# मौंजीचीं मंगलाष्टकें

आधीं ध्यावें पार्वतीकूमराला ॥ विद्या देतो जो स्मरे त्या नराला ॥ देवाचें जो विघ्न तोही निवारी ॥ पायादेवो वामनो ब्रह्मचारी ॥ बटो सुमुहूर्त सावधान ॥ १ ॥

पायीं वाळे पैंजणालागिं शोभा ॥ गोपीमध्यें ठेंगणा कृष्ण ऊभा ॥ ऐसा त्यातें क्रीडवीती कुमारी ॥ पायादेवो वामनो ब्रह्मचारी ॥ २ ॥

पहा हो हा बटु शोभतो साना ॥ वाळे नूपुरें दिसे गोजिरवाणा ॥ ऐसा त्यातें क्रीडवीती कुमारी ॥ पायादेवो वामनो ब्रह्मचारी ॥ ३ ॥

अनुपम्य बटोचें सुवदन साजे ॥ नानापरीचें बहु वाद्य वाजे ॥ ऐसा त्यातें क्रीडवीती कुमारी ॥ पायादेवो वामनो ब्रह्मचारी ॥ ४ ॥

नानापरि मिळालीं कुमरें बाळा ॥ नाना छंदें क्रीडती खेळखेळां ॥ ऐसा त्यातें क्रीडवीती कुमारी ॥ पायादेवो वामनो ब्रह्मचारी ॥ ५ ॥

रात्रीतें प्रहराहुनी अधिक जी ऐसी तृतीया वरी ॥ षष्ठी यामदिनाहुनी जरि तरी रात्रीं शुभातें करी ॥ तैसी द्वादशि अर्धरात्र उपरी वेष्टोनि राहे स्वरीं ॥ ऐशा ज्या तिथि त्या प्रदोष चुकल्या कुर्यात् बटोर्मंगलम् ॥ ६ ॥

---

# अथ उपनयनललितम्

अजिनं दंडकमंडलु मेखलारुचिरपावनवामन मूर्तये ॥ मितजगत्रितयाय जितारये निगमवाक्यपटवे बटवे नमः ॥ १ ॥

ईश्वरो वननिवासतत्परः पार्वती गिरिसुतौ विदधानः ॥ संस्मृतो भवति विघ्नविनाशो ब्रह्मचारिबटवेवरदः स्यात् ॥ २ ॥

भोगिभूषितविभूषितगात्रो हस्तकल्पित सुमोदकपात्रः विघ्ननाशकरः शिवपुत्रो ब्रह्मचारिबटवेवरदः स्यात् ॥ ३ ॥

मौंजीं च दंडं यज्ञोपवीतं कमंडलु सत्तिल-कोपधारी ॥ स्याद्ब्रह्मचारी शिखिवाहनोऽपिश्रियं कुमाराय शुभं ददातु ॥ ४ ॥

एक एव जगतामधुनेशः सायुधो वरकरो गणराजः ॥ हस्तिराजवदनाभिराजितो ब्रह्मचारि बटवे वरदः स्यात् ॥ ५ ॥

वानरो वनचरोपि वानरो राघवस्य करुणा-र्पितचित्तः ॥ अंजनीजठरसंभवबालो ब्रह्मचारि बटवे वरदः स्यात् ॥ ६ ॥

विघ्नपुंजदहनो गणपालो ह्यर्धचंद्रतिलकां-कितभालः ॥ पादमर्दितनिजाश्रितकालो ब्रह्मचारि बटवे वरदः स्यात् ॥ ७ ॥

अभ्रश्यामः शुभ्रयज्ञोपवीतः सत्कौपीनः पीत-कृष्णाजितश्रीः ॥ छत्री दंडी पुंडरीकाय ताक्षः पायादेवो वामनो ब्रह्मचारी ॥ ८ ॥

रेणुकाशतहुताशनधामजामदग्न्य कुलभूषण-रामः ॥ क्षत्रियांतकरणोत्तमणों ब्रह्मचारिबटवे वरदः स्यात ॥ ९ ॥

तदेव लग्नं सुदिनं तदेव ॥ विद्याबलं० ॥१०॥

बटुतें गणनाथचिंतन करविजे सुमुहूर्त सावधान ॥ ब्रह्मसावित्रिचिंतन करविजे सुमुहूर्त सावधान ॥ इष्टदेवता कुलदेवता ग्रामदेवता चिंतन सुमु० सावधान ॥ उमामहेश्वर चिंतन सुमुहूर्त सावधान ॥ अंतःपट दृढ आसिजे सुमुहूर्त ॥ जयघंटाशब्दप्रमाण सुमु० अत्यासंधि सावधान ॥ अति सुलभ सावधान ॥ अतिसुमुहूर्त सावधान ॥ अति समीप सावधान ॥ सावधान ॥ सावधान सावधान ॥ इति उपनयनललितं ॥

---

## कालिदासकृतं मंगलाष्टकम्

भास्वान्काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वर षट्त्रिस्थो दशमः शुभो गुरुविधू भौमश्च मित्राणी हि ॥ शुक्रार्कीं च रिपू कलिंगजनितश्चाग्नीश्वरो देवता मध्ये वर्तुलगश्च पूर्ववनदः कुर्यात्सदा मंगलम् ॥ १ ॥

चंद्रः कर्कटकप्रभुः सितनिभश्चात्रेयगोत्रोद्भव-श्चाग्नेय्यां चतुरस्रगो वरुणदिग्वक्त्रो बुधोधीश्वरः॥ षट्सप्ताग्निदशाद्यगः शुभफलो नारी बुधार्कप्रियः स्वामी यामुनकस्य किंशुकसमित्कुर्यात्सदा मंगलम् ॥ २ ॥

भौमो दक्षिणदिक् त्रिकोणगयमास्योऽवंतिजः स्वादिरश्चेध्मो वृश्चिकमेषपःसुरगुरुश्चार्कः शशीसौहृदः ॥ ज्ञोऽरिःषट्त्रिगतः शुभश्च वसुधास्कंधस्त-थाधीश्वरो भारद्वाजकुलाद्भवः शिखिनिभः कुर्यात सदा मंगलम् ॥ ३ ॥

सौम्यः पीत उदङ्मुखःसमिधपामार्गोऽत्रिगोत्र स्थितो वाणो शंकरदिग्गतो रविभृगू मित्रे रिपुः शीतगुः ॥ कन्यायुग्मपतिर्दशाष्टमचतुः षण्नेत्रगः शोभनः श्रीविष्णुःपुरुषः सुरो मगधजः कुर्यात्सदा मंगलम् ॥ ४ ॥

जीवश्चांगिरसोत्तरानन उदग्दीर्घोब्धिकोणा-सनः पीतोऽश्वत्थसमिच्च सिंधुजनीतो यश्चापमानी-

धिपः ॥ सूर्येंदुक्षितिजाः प्रियाः सितबुधौ चारींद्रकौ देवते बाणाद्रिधिनवस्थितोऽतिसुखदः कुर्यात्सदा मंगलम् ॥ ५ ॥

शुक्रो भार्गवगोत्रजःसिततरःप्राचीमुखः पूर्वदिक् पंचस्त्रासनगस्तुलावृषपतिश्चोदुंबरध्मः सुरः । ऐंद्रीद्रोपिच भोजजो बुधशनी मित्रेर्क चंद्रावरी धिक्पट् सप्तमवर्जितालयशुभः कुर्यात्सदा मंगलम्६

मंदःकृष्णतनुस्तु पश्चिममुखः सौराष्ट्रजः काश्यपः कुंभेणाधिपतिर्हितौज्ञभृगुजौ चार्केंदुभौमाद्विषः ॥ स्थानं पश्चिमदिक् प्रजापति यमौ देवो शुभः षट्त्रिगो यश्चापासनगःशमी तरुसमित्कुर्यात्सदा मंगलम् ॥ ७ ॥

राहुः सिंहकिकासुतोनिरऋतोदिक्कृष्णशूर्पासनो यःपैठीणसिगोत्रदक्षिणमुखोदुर्वासमिपीरुपः । कालोहि त्वमरौ हिता रविजविच्छुक्राः कुजार्के-

 

दुवो नेष्टा बर्बरजः शुभस्त्रिपुरगः कुर्यात्सदा मंगलम् ॥ ८ ॥

केतुर्जेमिनीवंशजः कुशसमिद्वायव्यदिक्स्थानगो धूम्रांगो ध्वजसंस्थितो यमदिगास्योमध्य देशोद्भवः ॥ ब्रह्मा यस्य तु चित्रगुप्तसहितः प्रोक्तोऽधिदेवः शुभः षट्त्र्यायेषुच सिंहिकातनुभवः कुर्यात्सदा मंगलम् ॥ ९ ॥

इत्येतद् ग्रहमंगलाख्यनवकं सर्वोपकारप्रदं पापौघप्रशमं महत्सुखकरं श्रीकालिदासोदितम् ॥ यःप्रातः प्रयतः पठत्यनुदिनं सौभाग्यदं कीर्तिदं स्तोत्रं मंगलदायकं ससकलं प्राप्नोत्यभीष्ट फलं ।१०।

॥ इति श्रीकालिदासकृतं मंगलाष्टकम् ॥




मुद्रक व प्रकाशक : दत्तात्रेय विश्वनाथ पाठक,
जगदीश्वर प्रि. प्रेस, गिरगांव, गायवाडी, मुंबई ४
आवृत्ति ९ वी ] [ पुनर्मुद्रण १९६४